( दी० ) अर्थेत्यादि । पक्षातिरिक्ते न प्रतीतो निश्चितो व्याप्तिग्रहानुकूलोऽन्वयेन व्यतिरेकेण वा सहचारो यस्य स तथा । हेतुरेवेति । तथाच लक्षणे पक्षातिरिक्तपदं सहचारग्रहस्थलप्रदर्शकं न तु विशेषकमिति । विशेषकत्वाभिप्रायेण दूषणद्वयमाह तत्रैवेत्यादि । असाधारणे सपक्षव्यावृत्ते पक्षतादशायां शब्दोऽभिधेयः शब्दत्वादित्यादौ जलं निःस्नेहं शीतस्पर्शवत्त्वादित्यादौ रूपं जलं वा द्रव्यभिन्नं गुणवत्त्वात् गुणकर्मान्यत्वविशिष्टजातिमत्त्वादित्यादौ विरुद्धे चातिव्याप्तिरित्यर्थः । दूषकतायामिति । सहचाराभावस्यैव ज्ञानं विरोधि न तु तत्प्रत्ययांशस्यापीति । अर्थेत्येति । अनैकान्तिकशब्दार्थविवेचनेन प्रातिस्विकरूपेणैव प्रतिपादकत्वव्यवस्थितेरित्यर्थः ।

केचित्तु दूषकतायामसाधकतायाम् , अर्थेति, अनैकान्तिकशब्दार्थे उभयकोट्युपस्थापकत्वादौ साध्योपस्थापकत्वाद्यंशस्य व्यर्थत्वादित्यर्थ इत्याहुः ।

विप्रतिपत्तिः पक्षे साध्याभावप्रतीतिः साध्ये पक्षनिष्ठाभावप्रतियोगित्वप्रतिपत्तिर्वा ? आद्ये केवलान्वयीति । साध्याभावाप्रसिद्ध्या अव्याप्तिरित्यर्थः । उभयत्र सर्वस्येति । अतिव्याप्तेरिति पाठे तन्मात्रवृत्तित्वं तद्व्याप्यवृत्तिकत्वं तदितरावृत्तित्वं वा ? आद्ये केवलेति । इदञ्च यथाकथञ्चिद्व्याप्तिग्रहदशायाम् । द्वितीये सर्वस्येति ।

(भा०) पक्षातिरिक्तेत्यादि यथाश्रुतमूलेऽप्रतीतपदस्य पक्षातिरिक्तपदव्यवहिततया पक्षातिरिक्ते सहचाराप्रत्ययो न लभ्यते, एवं व्याप्तिग्रहानुकूलपदसहचारपदयोरव्यवधानविरहेण व्याप्तिग्रहानुकूलसहचारत्वावच्छेदेनाप्रतीतिश्चान्वयालाभ इति विपर्ययेण योजयित्वा व्याचष्टे पक्षातिरिक्त इत्यादि । सर्वत्र साध्यसन्देहदशायामपि हेतौ व्याप्यसहचारस्य संशयरूपप्रतीतिसम्भवात् प्रतीतिपदं निश्चितार्थ-

र्थकतया व्याचष्टे न प्रतीत इति । व्याप्तिग्रहानुकूलत्वेनानुगमनीयं सहचारद्वयं विशिष्य दर्शयति अन्वयेन व्यतिरेकेण चेति । सहचारस्य साध्यसाधनसहचारत्वेन निवेशे व्यतिरेकिणि साध्याभावहेत्वभावसहचारत्वेन निवेशेऽन्वयिन्यव्याप्तिः, सहचारत्वेनोभयोरनुगमे उदासीनपदार्थसहचारग्रहदशायां अनुपसंहारित्वप्रसक्तिरिति तद्वारणमुक्तरूपेणानुगमफलं बोध्यम् । यस्येत्यस्य व्याप्तिग्रहेणान्वयः । षष्ठ्यर्थसम्बन्धश्च तद्धेतुकानुमित्यनुकूलत्वम्, तथाच तद्धेतुकानुमित्यौपयिकव्याप्तिग्रहानुकूलसहचारानिश्चयाभाववत्तस्यानुपसंहारित्वमिति लक्षणं पर्यवसितम् । यदि च पक्षे व्याप्तिग्रहः कथंचिदिति ग्रन्थोऽसर्वपक्षकपर एव सर्वपक्षकपरत्वे तत्रैव सद्धेतावतिव्याप्तिरित्यग्रिमग्रन्थासंगतेः पक्षे सहचारप्रत्ययेऽपि पक्षातिरिक्तेप्रतीतसहचारकत्वेनातिव्याप्तेः पक्षातिरिक्तप्रसिद्ध्यात्रासंगतेः, एवं सर्वस्य पक्षत्वे पक्षे व्याप्तिग्रह इति विशेषाभिधानमप्यसंगतं स्यात्, एवं च तत्र पक्षातिरिक्तत्वपदमहिम्ना लक्षणगमनात् सद्धेतुरेवेत्यभिधानमसंगतमित्यतः पक्षातिरिक्तत्वांशस्य लक्षणाघटकत्वाभिप्रायेण तत् संगमयति तथाचेति । विशेषकं-सहचारग्रहस्थलव्यावर्त्तकम् । नन्वेवमग्रिमदूषणद्वयदानविरोध इत्यतोऽभिप्रायानवबोधमूलकत्वेन तत् संगमयति विशेषकत्वेति । दूषणद्वयमप्रसिद्धेरित्यन्तम् । शब्दोऽनित्यः शब्दत्वादित्यादौ प्रसिद्धासाधारणे गगनादौ व्यतिरेकसहचारस्यैव प्रतीतत्वादयं गौरश्वत्वादित्यादिविरुद्धे च घटादौ व्यतिरेकसहचारनिश्चयसंभवान्नातिव्याप्तिसंगतिरतोऽसाधारणविरुद्धयोरिति मूलं तद्विशेषपरतया व्याचष्टेऽसाधारण इति । वक्ष्यमाणकेवलान्वयिसाध्यकहेतोर्विपक्षाप्रसिद्ध्या जलं निःस्नेहं शीतस्पर्शवत्त्वादित्यादौ बाधावतारदशायां विपक्षप्रसिद्धावपि तद्व्यावृत्तत्वाभावात् सपक्षविपक्षव्यावृत्तत्वरूपमसाधारण्यं न संभवतीति असाधारण इत्यस्यार्थमाह सपक्षव्यावृत्त इति । शब्दोऽभिधेयः शब्दत्वादित्यादौ पक्षेऽन्वयसहचारस्य सत्त्वे दशाविशेषे निश्चयसंभवादाह पक्षतादशायामिति । अतिव्याप्तिरित्यग्रिमेण संबध्यते । यत्र सहचार एव नास्ति तादृशमुदाहरति जलमिति । निःस्नेहत्वं-स्नेहशून्यत्वम्, अत्र च सर्वदैवातिव्याप्तेः पक्षतादशायामित्यस्य न प्रयोजनम् इत्याविष्कर्तुमित्याद्यादिति मध्येऽप्युक्तम् । अस्य च विरुद्धत्वेऽपि [illegible]

शायां तत्सहचारसंभवात् साधारणतयोपपादनमविरुद्धम् । अलं चेति ।
थमेऽसिद्धिसंकीर्णो द्वितीये च बाधसंकीर्णो विरोध इति भेदः ।
टादावुत्पत्तिकाले गुणरूपहेत्वभावसत्त्वेऽपि प्रतियोगिवैयधिका-
ण्यावच्छिन्ने तस्मिन् साध्याभावसहचारो न सम्भवति, स एव च
तिरेकव्याप्तिग्रहानुकूलः—प्रतियोगिवैयधिकरण्यावच्छिन्नाया एव
ापकताया अव्याप्यवृत्तिव्यभिचारिण्यतिव्याप्तिवारणाय तादृशा-
ाशी निवेशनीयत्वात् प्रथमेऽतिव्याप्तिसंगतिः, प्रतियोगिवैयधिकर-
ण्यानवच्छिन्नोऽपि यदभावे साध्याभावसहचारो न सम्भवति तत्राति-
ाप्तिरतिस्फुटतया तादृशमपि हेतुमाह गुणकर्मावृत्तीति । समवायि-
वृत्तित्वस्य हेतुतायाश्च लाभाय आनीति । अतिव्याप्तिरिति । य-
पि प्रथमोक्तासाधारणभिन्नस्थलत्रये व्याप्तिग्रहानुकूलसहचाराप्र-
ाद्धया नातिव्याप्तिसम्भवः, तथापि प्रकृतसाध्यादिसहचारस्य प्रमे-
त्वेन केवलसहचारत्वादिना वा निश्चयदशायामनुपसंहारिण्यव्या-
ावारणाय व्याप्तिग्रहानुकूलो यः सहचारनिश्चयः पुरुषनिष्ठस्तदभा-
एव विवक्षणीयः, तथा चोक्तस्थलेष्वपि कदाचित् कस्यचिदन्यदी-
सहचारे साध्यादिसहचारत्वभ्रमेण व्याप्तिभ्रमोत्पत्त्या प्रसिद्धता-
शभ्रमरूपसहचारनिश्चयाभावमादायातिव्याप्तिसम्भवाद्वासंगतिः ।
क्षातिरिक्तत्वविशेषणस्य दूषकतायामनुपयुक्तत्वेऽपि तस्य विशेषण-
ानभ्युपगमे न दोष इति प्रत्ययांशघटितस्य दोषत्वासंभवपरतया
षकतायामित्यादिमूलं व्याचष्टे दूषकतेति । न तु तत्प्रत्ययांशस्य
यांशघटितस्य सहचारप्रत्ययाभावस्येति यावत् । ज्ञानं विरोधी-
अनुषंगेणान्वयः । ग्राह्याभावाद्यविषयत्वादिति भावः । प्रत्ययांश-
परित्यागे च विरोध एव पर्यवसानमित्याशयः ।

अनुपसंहारित्वज्ञानस्याविरोधित्वेऽपि अनैकान्तिकत्वरूपसामान्य-
मस्य विरोधिधीविषयत्वेन दोषतयाऽनुपसंहारिणो दुष्टत्वमव्या-
तमित्याशंकते मूले न चेति । दीधितावनैकान्तिकशब्दार्थेति । अ-
कान्तिकत्वं व्याप्तिग्रहविरोधिधर्मवत्त्वं साधारणादेः साधारण्यादि-
ममादायैव उपपादनीयम् अनुगततादृशधर्मान्तरासम्भवात्, तथा
साधारण्याद्यज्ञानत्वेनैव प्रतिबन्धकत्वमावश्यकमित्यनुपसंहा-
त्वे दूषकताविरोधिप्रत्ययांशनिवेशानवच्छेदकदोषो दुर्वार एवेति
वः ।

मिश्रमतमाह केचित्विति । असाधकतासाधकताया अनुप हारितादेरस्येत्यादिः । एवं च साध्यसहचाराभाववत्त्वैवासाधकत व्याप्यत्वेन व्यभिचारावारकत्वेन प्रत्ययांशवैयर्थ्यं बोध्यम् । (मूले) न दूषकतेत्यत्र च (प)तन्मेत दूषकताऽसाधकतासाधनमनैकान्तिकत्वे लिंगेन न तु प्रत्येकमनुपसंहारित्वादिना, तथाच तस्य व्यभिचार वारकविशेषणवत्त्वेपि न क्षतिरिति तादृशमूलाशयः । उभयको ति । साध्यतदभावेत्यर्थकम् । उपस्थापकत्वादित्यादिना विरुद्धान पक्षवृत्तित्वे सतीत्यादिरूपपरिग्रहः । साध्योपस्थापकत्वादित्यादि ह्निनीयानैकान्तिकत्वघटकसत्यन्तपरिग्रहः । व्यर्थत्वादिति । विरुद्ध वेरपि असाधकत्वेन तद्यावर्त्तकतादृशविशेषणस्य व्यभिचारावा कत्वादिति भावः ।

अथ साध्योपस्थापकतावच्छेदकरूपमात्रस्यासाधकताहेतुत यथा तादृश(साध्य)सहचारत्ववति सद्धेतौ व्यभिचारः तथा स ध्याभावोपस्थापकतावच्छेदकरूपमात्रस्य हेतुत्वेऽपि तादृशसाध्य भाववद्वृत्तित्ववति सद्धेतौ व्यभिचारो दुर्वार इति कोटिद्वयो स्थापकतावच्छेदकरूपहेतौ वैयर्थ्याभिधानासङ्गतिः । साध्योपस्थ पकतावच्छेदकसाध्यसहचारतदभावोपस्थापकतावच्छेदकतदभा वद्व्यावृत्तत्वयोः सद्धेतुसाधारणत्वेपि यद्रूपविशिष्टविषयकज्ञानज स्योपस्थितिः यद्रूपविशिष्टविषयकज्ञानजन्यसाध्याभावोपस्थिति सहकारेण सन्देहजनिका तदुभयरूपवत्त्वस्यैव उभयकोट्युपस्था कतावच्छेदकरूपवत्त्वमित्यनेन विवक्षितत्वात्, तादृशसद्धेतुव्या वृत्तत्वेनासाधकतासाधकत्वसंभवादिति चेन्न ।

निष्कृष्टमते धर्मितावच्छेदकधर्मिणि यद्रूपवत्ताज्ञानं साध्यसन्दे हजनकं तद्रूपवत्त्वस्यैव तदुभयकोट्युपस्थापकतावच्छेदककरू पवत्त्वमित्यत्र विवक्षितत्वात् । तत्र धर्मितावच्छेदकविशिष्टसाध्यत दभावोभयप्रकारकज्ञानस्यैव साध्यसन्देहपदार्थतया तत्र प्रकारत्वा वैयर्थ्यपरतया प्रकृतग्रन्थसंगतेः । तादृशलक्षणे साध्याभावप्रकार कानुमिति प्रति धर्मितावच्छेदकविशिष्टधर्मिणि साध्याभावव्याप्ति विशिष्टवत्ताज्ञानस्य हेतुतया व्यावृत्तिव्याभिचारवारणायैव साध्यप्रका रकत्वनिवेशस्यावश्यकत्वानुमाने च सद्धेतौ व्यभिचारप्रसंगात् तौ ध्यस्य दुर्वारत्वात् । साध्यप्रकारकत्वमात्रनिवेशे साध्यानुमिति

साध्यव्याप्यवत्ताज्ञानविषयतावच्छेदकव्याप्तिमादाय व्यभिचारग्राहकसाध्याभावप्रकारत्वांशवैयर्थ्याप्रसक्तेर्न तद्वैयर्थ्यमुक्तम् । व्योमयकोट्युपस्थापकत्वादाविःत्यादेः साध्यवदभावप्रकारकज्ञानकत्वादावनुपस्थितविशेषणतया प्रविष्टं यत्साध्यप्रकारकत्वं तदादिविशेषणवैयर्थ्यादित्यर्थो द्रष्टव्यः। सहचारप्रत्ययाभावः सहचाराभावन्य एवेति धर्मिभेदाद्वैयर्थ्यमत्रास्वरसबीजं बोध्यम् ।

सर्वस्य पक्षत्वे मात्रार्थाभावादिति केवलान्वयिसाध्यकाव्याप्तौ हेतुः साध्ये केवलान्वयित्वाभिधानानुपयोगापत्तेरिति साध्याभावासिद्धेरेव तद्धेतुत्वं मूलकृतोऽभिमतम् । सर्वस्येत्यादिकं च सर्वपक्षसामान्य एवाभिप्रताव्याप्तेर्दोषान्तरस्य हेतुपरम् । एवं च साध्ये तनिष्ठाभावप्रतियोगित्वप्रतिपत्तेर्विप्रतिपत्तिपदार्थत्वे प्रथमदोषासङ्गारिति तं सङ्गमयितुं विप्रतिपत्तिपदार्थं वितर्कयति विप्रतिपत्तिरिति । तपदं विषयताविशेषलाभाय ।

मूले पक्षत्व इति । विप्रतिपत्तिविषयत्व इत्यर्थः । केवलान्वयिसाध्यकेऽतिव्याप्तेरिति पाठे मात्रार्थाप्रसिद्धेरतिव्याप्त्यसङ्गतेः तत्सङ्गमनाय वितर्कयति तन्मात्रवृत्तित्वमिति । तत्वव्याप्यवृत्तिकत्वं विप्रतिपत्तिविषयत्वव्याप्याधिकरणताकत्वम्, विप्रतिपत्तिश्च साध्ये तनिष्ठाभावप्रतियोगित्वविप्रतिपत्तिरेव । तदितरेति । विप्रतिपत्तिविषयेतरेत्यर्थः । केवलान्वयिसाध्यकस्य विप्रतिपत्तिविषयत्वव्याप्यतेस्सर्वमभिधेयं प्रमेयत्वादित्यादिहेतोर्लक्ष्यतया नातिव्याप्तिः संगच्छत इत्यत आहेदं चेति । कथंचिदिति । सर्वत्र साध्यसन्देहसत्वेपि तर्कादिना व्याप्तिग्रहदशायामित्यर्थः । व्याप्त्यनिश्चयदशायामेव च तस्य लक्ष्यत्वादिति भावः। असाधारणव्यतिरेकिणोरप्यतिव्याप्तिर्बोध्या ॥

इत्यनुपसंहारिपूर्वपक्षः ॥

(दी०) उच्यते व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र स हेत्वाभासोऽनुपसंहारी । स चान्वयेन व्यतिरेकेण वा सर्वस्य पक्षत्वे दृष्टान्ताभावात् घटोऽभिधेयो घटाकाशोभयवृत्तिद्वित्वाश्रयत्वादित्यादौ सा-

व्यसाधनसाहचर्य्याज्ञानात्तस्य विरुद्धत्वाज्ञानदशाया मनुपसंहारित्वेनेष्टत्वात् ।

केवलान्वयिधर्म्मावच्छिन्नपक्षको वा । सर्वमभिधेयं प्रमेयत्वादिति सद्धेतौ न केवलान्वयी पक्षतावच्छेदकः निश्चितसाध्यवद्वृत्तित्वात् । विप्रतिपत्त्या साध्यानिश्चयदशायां पक्षत्वे तदनुपसंहार्य्येव । व्यतिरेकिसाध्यके साध्याभाववद्वृत्तित्वाज्ञानदशायामिदं दूषणम्, तदवगमेऽपि साधारणसङ्कर एव । एवं व्याप्यत्वासिद्धेर्ज्ञाने । तदुद्भावने चायं व्यभिचारवदुपजीव्यत्वाददोषः । घटाकाशोभयवृत्तिद्वित्वाश्रयत्वञ्च विरुद्धमेव । एतेनानुपसंहारित्वप्रतिसन्धाने यदि व्याप्तिग्रहस्तदानुमितिरेव तदभावे व्याप्यत्वासिद्धिरेवेति निरस्तम्, उपजीव्यत्वादिति ।

इत्यनुपसंहारिचिन्तामणिः ॥

---

( दी० ) व्याप्तीत्यादि । यत्र यस्येत्यर्थः । तथाच हेत्वभिमतशब्दोपसन्दानात् बद्धेतुकपक्षतसाध्यसिद्धयौपयिकव्याप्तिग्रहानुकूलोपसंहाराभावस्तस्यानुपसंहारित्वमित्यर्थलाभाद्व्यतिरेकिणि नातिव्याप्तिः ।

ननूपसंहारः सहचारः तन्निश्चयो वा ? आद्ये तादृशस्याभावो निखिलप्रसिद्धानुपसंहार्य्यव्यापकः अतिव्यापकश्च रूपं द्रव्यभिन्नं गुणवत्त्वाद्गुणकर्म्मान्यत्वविशिष्टसत्तावत्त्वादित्यादेः, द्वितीये पुनरज्ञानरूपासिद्धिपर्यवसायी कारणाभावतया स्वरूपसन्दोषो न हेत्वाभास इत्यत आह केवलान्वयीति । पक्षः साध्यनिश्चयविरोधिनः साध्यवत्त्व वेत्यादेः सन्देहस्य विषयाः। अवच्छे-

त्वञ्च स्वान्यूनवृत्तितत्कत्वं तच्च स्वरूपसतोऽप्यविरुद्धम् । तेन तिरिक्तद्रव्यत्वादिरूपेण सर्वत्र साध्यसन्देहदशायां नान्या । एवञ्च सर्वत्रैव हेत्वादिमति साध्यतदभावसन्देहाद्व्याप्त्य णाभासत्वम् ।

परार्थस्थले बहिर्भावं व्युत्पादयति एवमित्यादिना । असि रनिश्चयः । ज्ञाने ज्ञापने । स्वार्थस्थलेऽन्तर्भावम् एतेनेत्या नाशङ्क्य निरस्यति उपजीव्यत्वादिति ।

( गा० ) यत्रेत्यस्य सहचारग्रहाभावरूपैकधर्म्युपसंहारा ग्रनान्वये व्यतिरेकिण्यतिव्याप्तिः-व्यतिरेकसहचारप्रकार हस्य हेत्वभावे सत्त्वेपि विषयतया तदभावस्य हेता तत्वात्, तस्य व्याप्तावन्वयेऽपि व्यतिरेकसहचारग्रहस्या व्याप्त्यग्राहकत्वे सैवातिव्याप्तिः-व्यतिरेकव्याप्तेः प्रकृतहे ष्ठत्वाभावात्, सप्तम्यर्थविषयतया व्याप्तिग्रहेऽन्वयेपि स दोषः-प्रकृतहेतोर्व्यतिरेकसहचारग्रहाधीनव्यतिरेकव्याप्तिग्रहा यत्वात्, अतः षष्ठ्यर्थपरतया सप्तमीं व्याचष्टे यत्रेति । एवं च तेरेकव्याप्तेः प्रकृतहेतुनिष्ठत्वविरहेऽपि तद्ग्रहस्य प्रकृतहेतुविषयक वरहेपि वा तत्सम्बन्धितया तद्ग्रहानुकूलसहचारग्रहदशायां ना याप्तिरिति भावः । ननु यथाकथंचित् सम्बन्धस्य उदासीनव्या दावपि सत्त्वेन व्याप्तेराधाराधेयभावरूपो विषयत्वरूपो वा स ध एव विवक्षणीयः, तथाच तद्दोषतादवस्थ्यमित्यत आह तथा । हेत्वभिमतेति । स्वहेतुकप्रकृतसाध्यसिद्ध्यौपयिकसम्बन्ध पर्यग्राहकहेत्वभिमतपदसमभिव्याहारादित्यर्थः । एतेन तत्पद र्थ्यशंकापि निराकृता । उपसंहाराभावस्तु तत्पुरुषनिष्ठस्तं प्रति हेतोरनुपसंहारित्वमित्यर्थलाभादित्यर्थः ।

सर्वं द्रव्यभिन्नं गुणवत्वादित्यादौ अन्वयसहचारस्य व्यतिरेक चारस्य च विरहाल्लक्षणसमन्वयसम्भवेन प्रसिद्धानुपसंहारिणि मभिधेयं नित्यं वा प्रमेयत्वात् द्रव्यत्वाद्वेत्यादावव्याप्तेरभिधानं बा भवस्यावश्यमुक्तस्थलेपि प्रकृतव्याप्तिग्रहानुकूलसहचाराप्रसिद्ध्या याश्रुतलक्षणसम्भवस्तथापि प्रकृतसाध्यसिद्ध्यौपयिको यो व्या

प्तिग्रहस्तदननुकूलसहचारसामान्यकत्वविवक्षणे पदार्थान्तरसहचा
रस्य प्रकृतसाध्यसिद्ध्यौपयिकव्याप्तिधर्मानुकूलत्वाभावमादाय लक्ष
णसमन्वयसम्भवः । न च गुणादिनिष्ठद्रव्यत्वादिसहचारस्य द्रव्यभे
दादिसहचारत्वभ्रमाविषयतया प्रकृतव्याप्तिग्रहानुकूलत्वसत्त्वान्न स
हचारसामान्ये तदननुकूलत्वमिति कथं लक्षणसङ्गमनमिति वा
च्यम् । सहचारपदेन किञ्चित्प्रतियोगिकत्वकिञ्चिदनुयोगिकत्वविशि
ष्टसहचारत्वविशिष्टपर्य्याप्तविषयताया विवक्षणीयत्वात् । भ्रमवि
षयविशिष्टसहचाराप्रसिद्ध्या तद्विषयताया वास्तवसहचारत्वविशि
ष्टापर्य्याप्तत्वात् भ्रमात्मकज्ञानविषयतासामान्ये च प्रकृतव्याप्तिग्रह
नुकूलत्वविरहस्याक्षतत्वात् । रूपमिति । प्रतियोगिवैयधिकरण्य
नवच्छिन्ने गुणाभावे द्रव्यान्यत्वाभावसहचारसम्भवात् गुणकर्म
वृत्तिजातिमत्त्वहेत्वनुसरणम् । अज्ञानरूपासिद्धिपर्य्यवसायी-अज्ञान
रूपासिद्ध्यात्मकः, कारणाभावतया-व्याप्तिग्रहकारणाभावतया, स्व
स्वरूपसन्नेव-ज्ञानानपेक्ष एव, दोषः-परम्परयानुमित्यनुत्पादप्रयोज
कः । न हेत्वाभास इति । यद्यपि वक्ष्यमाणसाध्यसन्देहविषयत्वरूप
मनुपसंहारित्वमपि स्वरूपसदेव विरोधीति न तस्य हेत्वाभासता
सम्भव इति लक्षणद्वयेऽपि तुल्यानुयोगः, तथापि प्रथमस्य कारणा
भावतया स्वरूपसद्दूषणत्वं स्फुटतरं न द्वितीयस्य तस्यातथात्वादि
त्यापातत ईदृशानुयोगेन द्वितीयावतारसंगतिरित्यवधेयम् ।

पक्षपदस्य साध्यवान्न वेति संशयविषयपरत्वे केवलान्वयिसा
ध्यकेऽव्याप्तिस्तत्र कोट्यप्रसिद्ध्या तादृशसंशयासम्भवात्, स्वनि
ष्ठाभावप्रतियोगित्वसंशयविषयसाध्यकत्वार्थकत्वे पक्षविशेष्यकसं
शयदशायामनित्यत्वादिसाध्यकेऽव्याप्तिरतः संशयद्वयमनुगमयति
पक्ष इति । पक्षताग्रन्थे व्याख्यातमेतत् । यद्यपि घटः प्रमेयवान् इ
त्यादौ प्रमेयं घटनिष्ठाभावप्रतियोगि न वेत्यादिसंशयविषयताया
केवलान्वयिधर्मव्यापकत्वात् यथाश्रुतेऽतिव्याप्तिः, विषयताविशेष
निवेशे उभयविधसंशये धर्मिविषयताया एकविधत्वाभावादननुग
मः, प्रकृतानुमित्युद्देश्यनिष्ठसाध्यवत्तानिश्चयविरोधिसंशयविषयता
निवेशे विवक्षिते साध्यसन्देहदशायां व्यतिरेकिधर्मावच्छिन्नप
क्षे साध्यसाधकस्याप्यनुपसंहारितया दूषकताबीजसत्त्वेनोपसंग्र
ह्यतया तत्राव्याप्तिः । तथापि स्वप्रतिबन्धकतावच्छेदकीभूतसाध्य

निश्चयविशेष्यतासमानाधिकरणसंशयविषयताविवक्षणाच्च दोषः ।
मेयं घटनिष्ठाभावप्रतियोगि न वेत्यादिसंशयस्य घटादिमात्रवि-
यताया एव तादृशसंशयप्रतिबन्धकतावच्छेदकप्रमेयादिप्रकारता-
रूपितविशेष्यतासमानाधिकरणत्वात् तादृश्याश्च केवलान्वयि-
र्माव्यापकत्वात् । ननु यत्र केवलान्वयिसर्वत्वादिकं धर्मितावच्छे-
कीकृत्य न साध्यसंशयोऽपि तु द्रव्यत्वगुणत्वादिविशेषधर्मं धर्मि-
ावच्छेदकीकृत्यैव विश्वविषयकसंशयः तत्र संशयविषयतायां स्व-
पसम्बन्धरूपकेवलान्वयिधर्मावच्छिन्नत्वाभावाद्व्याप्तस्तत्रापि स
चारग्रहारूपदूषकताबीजसत्त्वेनालक्ष्यतास्वीकारासम्भवात् इत्यत
ाह अवच्छेदकत्वं चेति । स्वान्यूनवृत्तितत्कत्वमिति । तथा च के-
लान्वयिधर्मव्यापकं संशयविषयत्वं पर्यवसितम् । केवलान्वयि-
र्मव्यापकत्वं चात्यन्ताभावाप्रतियोगित्वमेव न तु केवलान्वयिध-
र्मनिष्ठात्यन्ताभावाप्रतियोगित्वं निष्ठान्तनिवेशे प्रयोजनाभावात् ।
वरूपसतोऽपि-संशयधर्मिण्यप्रकारीभवतोऽपि नाव्याप्तिरिति । तादृश-
मूहालम्बनसंशयविषयतायास्तत्संशयविषयतात्वेन केवलान्वयि-
र्मव्यापकत्वादिति भावः । यत्र विश्वेषां नैकसंशयविषयता अपि
क्रमिकसंशयद्वयविषयतैव तादृशस्य संग्राह्यत्वे तत्कालीनसंशय-
ेषयतात्वेन व्यापकत्वं विवक्षणीयम् ।

हेत्वादीत्यादिना हेत्वभावपरिग्रहः । व्याप्त्यग्रहेणेति । व्याप्त्यनि-
ायेनेत्यर्थः । सहचारनिश्चयासंभवादिति भावः । न च धर्मिणि
किञ्चिद्रूपेण साध्यादिसंशयेऽपि साध्याद्यंशे निर्धर्मितावच्छेदकसा-
ध्यादिसहचारस्य हेतौ निश्चये बाधकाभाव इति वाच्यम् । तद्ध्रुवतया
ह्यमाणे सर्वत्र तत्संशयदशायां तत्र सहचारसंशयसामग्र्या अ-
ौत्सर्गिकत्वात्, क्वचित् स्वाधिकरणे तन्निश्चयदशायामेव तादृशनि-
ायेन स्वाधिकरणवृत्तितत्कत्वनिश्चयेन वा तत्सामानाधिकरण्या-
ावनिवर्त्तनात्, स्वस्मिन् तत्सामानाधिकरण्यसंशयसामग्रीविघट-
ासंभवात् । आभासत्वं हेतोर्दुष्टत्वम् ।

मूले सन्देहाविति । क्वचिदधिकरणे साध्यनिश्चयदशावच्छिन्न
त्यर्थः । साध्यानिश्चयदशायां-सर्वत्र साध्यसन्देहदशायां, पक्षत्वे-
केवलान्वयिधर्मस्य पक्षतावच्छेदकत्वे, तत्-अभिधेयत्वसाध्यकप्रमे-
यत्वम् व्यतिरेकिसाध्यके अनित्यत्वादिसाध्यकप्रमेयत्वादौ । अज्ञानद-

शायामिति। साध्याभावांशे निश्चयरूपज्ञानविरहदशायामित्यर्थः। इ
इदमेवानुपसंहारित्वमित्यर्थः। दूषणम्-अनुमित्यनुत्पादप्रयोजकं,
तु साधारण्यं तादृशनिश्चयात्मकज्ञानाविषयस्य तस्यातथात्वादिति
भावः। तदवगमे साधारण्यस्य यथोक्तनिश्चयरूपावगमदशायाम्। सा
धारणसंकर एवेति। कालान्तरीणानुपसंहारितासमानाधिकरणसा
धारण्यप्रयुक्त एवानुमित्यनुत्पाद इत्यर्थः। तथा चोभयोरेव पृथक्प्र
योजकतया नान्यतरदोषत्वमिति भावः। अनुपसंहारितादशायां
व्याप्त्यनिश्चयरूपव्याप्यत्वासिद्ध्यैवानुमित्यनुत्पादनिर्वाहादनुपसंहा
रिता न दूषणमित्यतेनेत्यादिनाशंक्य उपजीव्यतया तस्या दूषणत्वम
ग्रे व्यवस्थाप्यम् एवं व्याप्यत्वासिद्धित्वस्येत्यादिनाप्युपजीव्यतया
दूषणत्वं व्यवस्थाप्यत इति पौनरुक्त्याशंकां स्वार्थपरार्थानुमानपर
तया निराकरोति दीधितौ परार्थेति। बहिर्भावोऽसिद्धिबहिर्भावः,
स्वार्थस्थले व्याप्त्यनिश्चयस्य ज्ञानोद्भावनयोरनुपयोगादिति भावः।
अनुपसंहारित्वस्य दशाविशेषे व्याप्येपि हेतौ सत्वेन व्याप्त्यभावरू
पव्याप्यत्वासिद्ध्यनियतत्वाच्च तज्ज्ञापकत्वसम्भव इत्यसिद्धिपदम
ज्ञानरूपासिद्धिपरतया व्याचष्टेऽसिद्धिरिति। उद्भावनेऽर्थज्ञानद्वारैव उ
पजीव्यतया तदभिधानेनैवोद्भावकज्ञानेप्युपजीव्यत्वं लभ्यत इत्युद्भा
वनाधीनपरकीयज्ञानपरतया ज्ञानपरं व्याचष्ट ज्ञान इति। न चोद्भा
वनाधीनं परकीयज्ञानं शाब्दमेव तत्रानुपसंहारित्वस्य लिङ्गस्य नोप
जीव्यतासंभव इति वाच्यम्। वादिवाक्याच्छाब्दव्याप्त्यनिश्चयनि
श्चयेपि तत्प्रयोजकविरहशंकया तत्राप्रामाण्यशंकाया अनिवृत्तेः त
त्प्रयोजकानुपसंहारित्वज्ञानस्यापेक्षितत्वात्॥

( दी० ) अत्रेदं चिन्त्यम्। हेतुमति साध्याभावसन्देहो ना
भासः सत्त्वयैव विरोधित्वात्। तद्विषयस्तु हेतोः साध्याभावसामा
नाधिकरण्यं साध्यस्य वा हेतुमन्निष्ठाभावप्रतियोगित्वं नास्त्येव
केवलान्वयिसाध्यके, व्यतिरेकिसाध्यके तु साधारण्यरूपतया
सन्दिग्धानैकान्तिकत्वं पर्यवसितम्। विश्वविषयकसाध्यतदभाव
सन्देहे च कारणीभूतान्वयव्यतिरेकसहचारग्रहविरहात् संशयसा
मग्र्या साध्यतदभावव्यवनिश्चयप्रतिबन्धाद्वा व्याप्त्यग्रहेऽज्ञानरू

सिद्धिरेव, उपजीव्योऽपि च साध्याभावसन्देहादिनाभासः स-
थैव विरोधादिति ।

( गा० ) सन्देहोऽनुपसंहारित्वं तद्विषयो वा तदधीनो व्याप्य-
श्रयो वा ? तत्राद्यं दूषयति हेतुमतीति । नाभास इति । तथा च न
द्विशेषोऽनुपसंहारितारूपोपीति भावः। तथैव न तु ज्ञायमानतया।
तीयं दूषयति तद्विषयस्त्विति । हेतोः साध्याभावसामानाधिकरण्यं
तुमान् साध्यवान्न वेति संशयस्य साध्यस्य हेतुमन्निष्ठाभावप्रतियो-
त्वं संशयान्तरस्य विषयः । केवलान्वयिसाध्यके-सर्वमभिधेयं मे-
त्वादित्यादिप्रसिद्धानुपसंहारिणि । इदमुपलक्षणम् । सर्वमनित्यं घट-
ादित्यादिव्यतिरेकिसाध्यव्याप्यानुपसंहारिण्यपि तदसत्त्वं बोध्यम्।
यतिरेकिसाध्यके-सर्वमनित्यं प्रमेयत्वादित्यादौ । सन्दिग्धानैकान्ति-
त्वमिति । एतेन निश्चितसाध्याभाववद्वृत्तित्वं साधारण्यं साध्या-
ावांशे निश्चयात्मकस्यैव साधारण्यज्ञानस्य प्रतिबन्धकत्वादन्यथा
क्षे साध्यसन्देहेनानुमानमात्रोच्छेदापत्तेः सन्दिग्धसाध्याभावसा-
ानाधिकरण्यं पुनरनुपसंहारित्वमतो भेद इत्याशंका निराकृता । नि-
तविषयसंशयस्थले हेतौ सन्दिग्धसाध्याभावसामानाधिकरण्या-
रनुकूलतर्कानवतारे दोषतोपगमात्तस्य साधारण्यतया एव स्वी-
ार्यत्वात् तादृशस्थले तस्याविरोधित्वे सर्वत्र साध्यसंशयस्थले-
पविरोधितापत्तेस्तज्ज्ञानस्य प्रतिबन्धकतान्तरे मानाभावात् । तृ-
ीयं दूषयति विरहेति । सहचारग्रहविरहात् व्याप्त्यग्रह इत्यग्रिमे-
ान्वयः । ग्रहानिश्चयः, दोषतया स्वीकृत इति शेषः । सहचारनि-
श्चयत्वेन पृथग्व्यापकताग्रहकारणतायाः स्वानभिमततया व्याप्त्यग्र-
प्रयोजकान्तरमाह संशयेति । साध्यतदभावसंशयेत्यर्थः । साध्यतद-
भावत्वनिश्चयप्रतिबन्धादिति ।अन्वयव्यतिरेकव्याप्तिशरीरान्तर्गततया
दंशे निश्चयत्वघटकविपरीतभानासंवलितसाध्यतदभाववत्त्वभान-
विघटनादित्यर्थः । विपरीतकोट्यभाने तद्भासकसामग्र्यभावस्य
प्रयोजकत्वादिति भावः। अज्ञानरूपासिद्धिरेव दोषतया पर्य्यवसिता।
तथा च पूर्वोक्तैकधर्म्युपसंहाराभावस्येव नास्यापि हेत्वाभासत्वमिति
भावः ।

ननु व्याप्त्यग्रहस्याज्ञानरूपासिद्धित्वेन हेत्वाभासत्वेऽपि

तदुपजीव्यतया साध्यसन्देहः सहचाराविभ्रमो वा व्यभिचारवदाभासः स्यादेव असिद्ध्युपजीव्यत्वेऽज्ञायमानविरोधिताया आभासत्वाविरोधित्वादिति मूलानुसारिशंकां निराकरोति उपजीव्योपि चेति। ज्ञातस्यैव विरोधित्वादिति। तथा चाज्ञायमानविरोधिनो ज्ञानरूपासिद्ध्युपजीव्यत्वं न हेत्वाभासताप्रयोजकं दृष्टान्तस्य साधारण्यस्य ज्ञायमानतयैव विरोधित्वादिति भावः।

(दी० ) यत्तु व्याप्तीति, व्याप्तिग्रहानुकूलसहचारनिश्चयत्वावच्छिन्नविरोधिरूपवत्त्वमर्थः। विरोधस्तु संशयसाधारणमन्वयमात्रसहचारग्रहं विरुणद्धि, असाधारणे व्यतिरेकिणि च न व्यतिरेकसहचारग्रहविरोधः, तादृशरूपमन्तरेण लक्षणस्यासम्भवितया तदेव रूपं लक्षणमाह केवलेति। तादृशावच्छिन्नः पक्षः सन्दिग्धसाध्यको यस्याश्रयः स तथा। तथाच केवलान्वयिधर्म्मावच्छिन्नसाध्यसन्देहविषयवृत्तित्वमनुपसंहारित्वम्। व्यतिरेक्यादौ केवलान्वयी न साध्यसन्देहविषयतावच्छेदकः। साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वं वा तत्त्वम्। धर्म्मिविशेषनियन्त्रितस्तु सन्देहो नान्यधर्म्मिकनिश्चयविरोधी। साध्यासन्देहविषयताऽव्याप्यसाध्यसिद्ध्यनुकूलव्याप्तिग्रहौपयिकसत्ताकत्वं वा, तादृशी च सत्ता अन्वये हेतोर्व्यतिरेके च तदभावस्येति न कश्चिद्विशेषः। स्वरूपसत्तादृशसंशयविषये च हेतुमत्ताज्ञानं हेतौ साध्यसामानाधिकरण्यं संशयसामग्रीत्वेन तन्निश्चयप्रतिबन्धकम्, सर्वत्र संशयसामग्र्या निश्चयप्रतिबन्धकत्वकल्पनात्। हेतुमति सर्वत्र साध्याभावसन्देहे हेतौ साध्यसामानाधिकरण्याभावसंशयस्यौचित्यावर्जितत्वात् साध्याभावेन साध्यसामानाधिकरण्याभावोपस्थापनादिति।

(गा०) अत्रैव पूर्वपक्षेऽत्र ब्रूम इत्यादिमिश्रोक्तसमाधानं दूषयितुमुपन्यस्यति यत्त्विति। व्याप्तीति। प्रथमलक्षणसाधारण्यम्। व्याप्ति-

ति। व्याप्तिग्रहानुकूलो यो यः सहचारस्तत्तत्सहचारनिश्चयत्वाव-
च्छिन्नविरोधिरूपवत्त्वमित्यर्थः। सहचारनिश्चयवृत्तित्वमुपेक्ष्य निश्च-
यत्वावच्छिन्नत्वस्य प्रतिबध्यताविशेषणत्वात् आकाशाभाववाना-
काशादित्यादौ हेत्वादेरवृत्तित्वस्य उभयसहचारग्रहविरोधित्वेपि
नातिव्याप्तिः। अवच्छिन्नत्वं स्वरूपसम्बन्धविशेषः विरोधस्य हेतौ
साध्यसामानाधिकरण्यात्मकस्य उभयथा वारणं दर्शयति विरोध-
त्वति। संशयेत्यनेन प्रतिबध्यतायां निश्चयत्वानवच्छिन्नत्वं दर्शि-
तम्। अन्वयमात्रेत्यनेन व्यतिरेकसहचारग्रहविरोधित्वदलव्यवच्छे-
दः। यद्यप्यनुपसंहारिण्यपि हेतुनिष्ठकेवलान्वयिधर्मव्यापक(साध्य)-
संशयविषयवृत्तित्वं न हेत्वभावे साध्याभावसहचारनिश्चयविरोधिहे-
त्वभावधर्मिकसाध्याभावसंशयविषयवृत्तित्वग्रहस्यैव तद्धर्मिकतत्स-
हचारसंशयसामग्रीत्वेन तद्धर्मिकतन्निश्चयप्रतिबन्धकत्वात्तथापि त-
त्सहचारनिश्चयत्वावच्छिन्नविरोधित्वं नैकधर्मविशेषणम्। तथाच
सर्वमनित्यं घटत्वादित्यादौ अन्वयसहचारनिश्चयविरोधि यद्धेतुनिष्ठ-
तादृशसंशयविषयवृत्तित्वं यच्च हेत्वभावनिष्ठं तादृशसाध्याभावसंश-
यविषयवृत्तित्वं तदुभयरूपवत्त्वमादाय लक्षणसमन्वयः। येन केनापि
सम्बन्धेन विरोधिरूपवत्त्वनिवेशात् हेत्वभावनिष्ठसंशयविषयवृत्ति-
त्वस्यापि एकज्ञानविषयत्वादिना हेतुनिष्ठत्वात् सर्वमभिधेयमनित्यं
प्रमेयत्वादित्यादौ व्याप्तिग्रहानुकूलव्यतिरेकसहचाराप्रसिद्ध्या
यो यः सहचार इत्यनेनाप्यन्वयसहचारमात्रस्योपादानात् तद्विरो-
धिरूपमादाय लक्षणसमन्वयः। पर्वतो वह्निमान् धूमादित्यादौ
साधनवत्ताग्रहविषयकतिपयधर्मिविशेष्यकसाध्यादिसंशयविषये सा-
ध्यादेर्वृत्तिर्न साध्यादिसहचारनिश्चयविरोधिनी यद्यद्धर्मिणि
विशिष्य सम्बन्धो ज्ञायते तावद्धर्मिषु विशेषणसंशयस्यैव विशेष्य-
विशिष्टवृत्तित्वसंशयहेतुतया विशिष्टनिश्चयविरोधित्वात् नानाद-
ण्डवत्त्वेन ज्ञाते पुरुषे एकद्व्यादिदण्डे रक्तत्वादिसन्देहेपि रक्तदण्डवा-
न् वा पुरुष इत्यादिसंशयानुदयात्। न हि पर्वतवह्निसन्देहे महान-
सादिवृत्तितया गृहीतधूमे वह्निमद्वृत्तित्वसंशयः। तात्पर्यात्तु विशे-
षणसंशयाभावविशिष्टसम्बन्धज्ञानाभावस्य विशेष्यसम्बन्धज्ञान-
[illegible] च परस्परसहकारेणैव हेतुत्वकल्पनयेति। अन्वयसहचार-
निश्चयत्वावच्छिन्नविरोधिताभाग्रनिवेशप्रयोजनं सूचयति अत्र-

वारण इति। शब्दोऽनित्यः शब्दत्वादित्यादौ पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ चेत्यर्थः। ग्रहविरोधो-ग्रहानुत्पादः, तथा च तत्र साध्यसंशयविषयशब्दपृथिव्यादिवृत्तित्वे अन्वयसहचारनिश्चयविरोधित्वेऽपि व्यतिरेकसहचारनिश्चयाविरोधित्वाभावान्नातिप्रसङ्ग इति भावः। व्यतिरेकसहचारनिश्चयत्वावच्छिन्नविरोधितामात्रनिवेशे शब्दोऽनित्यः शब्दत्वाभावादित्यादौ व्यतिरेकसहचारनिश्चयत्वावच्छिन्नविरोधिनि हेत्वभावनिष्ठसाध्याभावसंशयविषयशब्दादिवृत्तित्वेऽतिप्रसङ्गो बोध्यः। तादृशरूपमिति। विरोधितावच्छेदकरूपमित्यर्थः। लक्षणस्य-विरोधिरूपवत्त्वरूपानुपसंहारिलक्षणग्रहस्य। यस्य पक्ष इत्यत्र विग्रहे साध्यसंशयविषयरूपपक्षपदार्थघटकसाध्ये यत्सम्बन्धिकतया षष्ठ्यर्थसम्बन्धान्वये केवलान्वयिधर्मावच्छिन्नविषयताकसंशयाविषयकसाध्यकत्वं लभ्यते, तस्य च ज्ञानं न व्याप्तिज्ञानविरोधि किन्तु वक्ष्यमाणक्रमेण साध्यसंशयाविषयवृत्तित्वज्ञानमेवातस्तल्लाभाय संशयविषयधर्म्यन्विताश्रयतासम्बन्धार्थकत्वं षष्ठ्याः प्रदर्शयितुमाह यस्याश्रय इति। केवलान्वयीति। अवच्छिन्नान्तं विषयताऽन्वयि। तन्निवेशप्रयोजनमाह व्यतिरेक्यादाविति। आदिना असाधारणपरिग्रहः। पर्वतो वह्निमान्धूमादित्यादेः संशयविषयमात्रवृत्तित्वं निवेश्य वारणसम्भवाद्व्यतिरेक्याद्यनुधावनम्। साध्यवत्तानिश्चयविरोधित्वेन संशयानुगमस्यावश्यकतया प्रतिबन्धकतायां तादृशनिश्चयत्वव्यापकत्वमेव निवेशयितुमुचितम् विषयतायां केवलान्वयिधर्मव्यापकत्वस्य निवेशापेक्षया लाघवादित्याशयेनाह साध्यवत्तेति। सामान्यपदेन व्यतिरेक्यादिवारणं स्फुटयति धर्मिविशेषेति। धर्मिविशेषनियन्त्रितः-कतिपयमात्रधर्मिकः। नान्यधर्मिकेति। समानधर्मिकविपरीतज्ञानस्यैव विरोधित्वादिति भावः।

ननु यत्र यत्र हेतुस्तद्व्यतिरेकश्च ज्ञातस्तावद्धर्मिकासर्वविषयसंशयदशायामपि हेतोरव्यनुपसंहारिता सहचारनिश्चयानुत्पादस्य दूषकताबीजस्य सत्त्वादिति तत्रोक्तलक्षणाव्याप्तिरतस्तत्साधारण्याय प्रकारान्तरमनुसरति साध्यसन्देहेति। उक्तस्थले ज्ञायमानहेतुतद्व्यतिरेकसत्तावत्त्वाधिकरणे सन्देहविषयत्वासत्त्वेऽपि न क्षतिः ज्ञायमानसत्तावत्त्व व्याप्तिग्रहानुकूलत्वात्। अथवा यत्र साध्यवति न हेतुर्यत्र वा साध्याभाववति न हेतुस्तत्र न साध्यसंशयः किन्तु यत्र यत्र धर्मिणि साध्य

र्वोः साध्याभावहेत्वभावयोश्च सहचारस्तादृशे सर्वत्रैव साध्यसंशय-त्रापि हेतोरनुपसंहारित्वं व्याप्तिग्राहकसहचारनिश्चयाऽसंभव-पदूषकताबीजस्याक्षतत्वादिति तत्साधारण्याय प्रकारान्तरमाह ाध्यसन्देहेति। साध्यवन्निष्ठहेत्वभावसत्तायाः साध्याभाववन्निष्ठ-तुसत्तायाश्च व्याप्तिग्राहकसहचाराघटकत्वेन व्याप्तिग्रहाननुकू-तया तदनुकूलसत्तायाः साध्यसंशयविषयताऽव्याप्यतयोक्तस्थले क्षणसमन्वय इति भावः। साध्यसन्देहस्य चोक्तानुगतरूपेणैव नि-शो बोध्यः। असाधारणव्यतिरेकिहेतुसत्तायाः साध्यसंशयविषयत्व-ाप्यतयातिप्रसङ्गवारणाय साध्यसिद्ध्यनुकूलत्वेनान्वयव्यतिरेक-ाप्ती अनुगमय्य तद्ग्रहानुकूलत्वेन हेतुतद्व्यतिरेकसत्त्वयोरनुग-ः। एतदेव दर्शयति तादृशी चेति। तादृशी-तादृशग्रहौपयिकी। न्वये अन्वयसहचारनिविष्टा व्यतिरेके व्यतिरेकसहचारनिविष्टा। दानीमनुपसंहारित्वस्य ज्ञायमानतया हेत्वाभासतानिर्वाहाय विरो-त्वं व्यवस्थापयति स्वरूपसदिति। साध्येत्यादेर्हेतोरित्यादिः। त-श्चयेति। साध्यसामानाधिकरण्यनिश्चयेत्यर्थः।

ननु हेतुमति साध्यसंशयस्य हेतौ साध्यसामानाधिकरण्यसं-यसामग्रीत्वमेवासिद्धमित्याशंकायामाह हेतुमतीति। औचित्याव-तत्वादिति। हेतुमति साध्यसत्त्वं हेतौ सामानाधिकरण्यनियतं र्वत्र तद्वति तदभावसत्त्वं तत्र तत्सामानाधिकरण्याभावनियतमि-ति तदुभयभाने तदुभयभानौचित्येनाप्रत्याख्येयत्वादित्यर्थः। ननु ाध्यसन्देहस्याधिकरणे सत्त्वेपि साध्यसामानाधिकरण्याभा-स्यानुपस्थितया न संशयः सम्भवति तदुपस्थापकसाधारणधर्मा-दर्शनसत्त्वे तदेव संशायकमस्त्वित्यत आह साध्याभावेनेति। ाध्यसामानाधिकरण्याभावस्य साध्याभाववृत्तित्वेनाश्रयतया त-सम्बन्धिसाध्याभावविषयकसाध्यसन्देहस्यैव तदुपस्थापकत्वादि-र्थः। एवं च संशयज्ञानस्यानुपयोगित्वेपि तद्विषयवृत्तिताया ज्ञा-स्य संशयसामग्रीविधया साध्यसामानाधिकरण्यघटितव्याप्तिनि-यविरोधितया तस्यानुपसंहारित्वरूपहेत्वाभासताऽक्षतैवेति स-दायभावः॥

(दी०) तथा, सर्वत्र साध्यसन्देहदशायां क्वचिदपि सा-

ध्यसामानाधिकरण्यस्याग्रहीतत्वेन तदभावस्य गृहीतुमशक्यत्वात् । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिश्चयस्याभावधीहेतुताया असकृदावेदितत्वात् ।

अस्तु वा स यथाकथञ्चित् साध्ये हेतुसामानाधिकरण्याभावसंशयहेतुत्वेन वा तथात्वं, न तथापि सामग्रीत्वेन प्रतिबन्धकतया हेत्वाभासत्वम् । अन्यथा व्यभिचरिताव्यभिचरितसमानासमानाधिकरणव्याप्याव्याप्यपक्षधर्मापक्षधर्मादिसाधनवान्निःसाधनादिसाधारणद्रव्यत्वादिमत्त्वम् हेतोः पक्षस्य चाभासान्तरं स्यात्, तदुपदर्शितस्येव तस्यापि ज्ञानस्येतरसाचिव्येन तत्तन्निश्चायकाविरोधिसंशयसामग्रीत्वात् । एवमसिद्ध्यादिनिश्चायकप्रत्यक्षसामग्र्यपि । अपि च हेतोः साध्याभावसन्देहविषयमात्रवृत्तित्वं दूषणमिति प्राप्तं तच्च व्यतिरेकिणि हेतौ नियतविषयेणापि सन्देहेन सम्पद्यते, दूषकताबीजसत्त्वे चासाधारण्यादिसाधारण्यं न दोषाय, न वा अत्रैव निर्भरः कर्त्तव्यो हेत्वाभासत्वानुपपत्तेरुक्तत्वादित्यलं पल्लवितेन ॥

( गा० ) अनुपसंहारितादशायां साध्यसामानाधिकरण्यसंशय एव दुर्घटः कथं तज्ज्ञानस्य तत्संशयसामग्रीत्वमित्याह सर्वत्रेति क्वचिदपीति । कमपि धर्मिणमन्तर्भाव्य साध्यांशे निश्चयरूपसाध्यवद्वृत्तित्वप्रकारकज्ञानस्याजातत्वेनेत्यर्थः । तदभावस्य–साध्यसामानाधिकरण्यत्वावच्छिन्नाभावस्य, गृहीतुमशक्यत्वात्–संशयेन कोटितया गृहीतुमशक्यत्वात् । ग्रहणस्याशक्यत्वे हेतुमाह प्रतियोगितावच्छेदकेति । सर्वांशे निश्चयरूपस्य प्रतियोगितावच्छेदकप्रकारकज्ञानस्येत्यर्थः । अभावधीहेतुताया इति । प्रतियोगिविशेषिताभावबुद्धौ विशेषणतावच्छेदक[illegible]विधया हेतुताया इत्यर्थः । प्रतियोगिविशेषिताभावबुद्धेः [illegible]तावच्छेदकविशिष्टवैशिष्ट्यावगाहितानियमादिति भावः ।

यत्तु निश्चयतासिद्ध[illegible]प्रतियोगिज्ञानहेतुत्वमप्रामाण्यं प्रत्य

ते । तद्धेतव-अभावलौकिकप्रत्यक्षं प्रत्येव स्वतन्त्रतद्धेतुतायाश्चैः
ःकारात् संशय उपनीताभावकोटिभाने तादृशकारणविरहस्या-
श्रित्करत्वात् ।

अथ सर्वत्र साध्यसन्देहदशायां तादृशप्रत्यक्षनिश्चयासंभवेपि
लान्तरीणनिश्चयजन्यसंस्कारतः स्मरणात्मकतादृशनिश्चयः संभ-
वेवेति चेन्न । यस्य पुंसः प्रागपि कुत्रचित् साध्यनिश्चयो न जा-
तस्य सहचारसंशयसामग्र्या एवमपि दुरुपपादत्वात् ।

ननु साध्यांशे निर्द्धर्मितावच्छेदकं तदंशे निश्चयरूपं साध्यसा-
नाधिकरण्यज्ञानं सर्वत्र साध्यसंशयदशायामपि सुलभमेव ध-
तावच्छेदकावच्छिन्नधर्मिविषयताया एव संशयत्वघटकतया ध-
तावच्छेदकावच्छिन्नतद्विषयताया निश्चयत्वसंपादकत्वात् । न च
र्मितावच्छेदकप्रकारेण सकलधर्मिणामेव तदा भानसंभवात् ध-
विषयताया धर्मितावच्छेदकानवच्छिन्नत्वं दुर्घटमिति वाच्यम् । एक-
ने धर्मितावच्छेदकावच्छिन्नतदनवच्छिन्नविषयतयोः सत्त्वे बाध-
भावादित्याशयेनाहास्तुवेति । सः-प्रतियोगितावच्छेदकीभूतसा-
सामानाधिकरण्यान्वयप्रकारकोनश्चयः,सर्वत्र साध्यसंशयदशाया-
पे पक्षे हेतुमत्तानिश्चयसत्त्वे हेतुत्वांशे निश्चयात्मकहेतुसामानाधि-
ण्यज्ञानसत्त्वेन साध्ये हेतुसामानाधिकरण्याभावसंशयः सुलभ
त्याशयेनाह साध्ये इति । न तथापि हेत्वाभासत्वमित्यन्वयः ।
ानुपसंहारिताया इति शेषः । अत्र हेतुः सामग्रीत्वेन प्रतिबन्धक-
ति । तज्ज्ञानस्येति शेषः । अन्यथा-प्रतिबन्धकसामग्र्यात्मकधी-
षयस्यापि हेत्वाभासत्वे, व्यभिचरिताव्यभिचरितेत्यादिपंचकस्यै-
साधारणान्वयः । तत्र च व्यभिचारिताऽव्यभिचारितादिचतुष्टय-
धारणद्वयत्वादिमत्त्वं हेतोः साधनवान्निःसाधनसाधारणतद्वत्त्वं
ास्य बोध्यम् । प्रथमद्वयं हेतौ व्याप्तिघटकदलयोः प्रत्येकाभावसं-
यकम्, तृतीयं विशिष्टव्याप्त्यभावसंशायकम्, तुरीयं पक्षधर्मत्व-
ायकम्, पंचमं पक्षे साधनाभावसंशायकमिति भेदः । तस्यापि
दृशद्वयत्वादिमत्त्वस्यापि,इतरसाचिव्येन-विशेषादर्शनादिसहका-
। तत्तन्निश्चयति । अव्यभिचारादिनिश्चयेत्यर्थः । प्रत्यक्षसामग्री-
किकप्रत्यक्षसामग्रीघटकविशेषणज्ञानादिविषयः, तादृशसामग्र्या-
ै बलवद्विपरीतभानसामग्रीत्वेन पक्षादौ हेतुमत्ताज्ञानप्रतिबन्धक-

स्यादिति भावः । दूषणान्तरमाहापि चेति । साध्याभावसन्देहविष
मात्रवृत्तित्वमिति । तस्मादस्य व्यतिरेकव्याप्तिग्रहाविरोधित्वेपि
रोधवदन्वयव्याप्तिग्रहाविरोधित्वेन हेत्वाभासताया दुर्वारत्वादि
भावः । व्यतिरेकिणि-पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ,
यताविषयेण-पृथिव्यादिमात्रविषयेण, संपद्यते-निर्वहति, तथा च त
त्वानुपसंहारितापत्तिरिति भावः । इदमुपलक्षणम् असाधारण्ये
तिप्रसङ्गो बोध्यः ।

वस्तुतस्तु असाधारणेपि व्यतिरेकव्याप्तिग्रहेण व्यतिरेकिपदे
साधारण्यस्य साक्षादेव लाभः । ननु साधारणादिव्यावर्त्तनायैव
न्देहाविषयताव्याप्यव्यतिरेकसत्त्वाप्यनुपसंहारित्वे निवेश्येत्यत अ
दूषकतेति । अन्वयव्याप्तिग्रहप्रतिबन्धलक्षणहेत्वाभासताप्रयोजक
त्वे साध्यसन्देहविषयमात्रत्वांशमात्रस्यासाधारण्यं न हेत्वा
सताविरोधीत्यर्थः । नन्वस्तु तदेवानुपसंहारित्वं व्यतिरेकिण
थात्वेपि व्यतिरेकव्याप्त्युपादानान्नानुमितिविरोध इत्यत आह नवे

(दी०) व्याप्तिग्रहप्रतिबन्धलक्षणैकप्रयोजनकत्वेन साधा
ण्यादीनामेकहेत्वाभासत्वम् । साधारणेन व्यापकत्वस्याव्यभिच
रित्वस्य वा असाधारणेन सामानाधिकरण्यस्यानुपसंहारिणा
व्यतिरेकव्याप्तेर्ग्रहस्य प्रतिरोधात् । लक्षणन्तु विशिष्टसाध्यस
धनग्रहाविरोधिनो ज्ञानस्य विषयतया व्याप्तिग्रहविरोधितावच्
दकं रूपम् । व्याप्तीश्चान्वयतो व्यतिरेकतश्च नानारूपाः प्रातिस्वि
रूपेण उपादाय तावदवगाही ग्रहो वाच्यः । साध्यसाधनयोरप्रसि
द्धेरसिद्धिभेदस्य वारणायाविरोधिन इत्यन्तम् । साध्यसाधनभेदे
व्यभिचारभेदाद्यत्र विशिष्टं साध्यं साधनं वाऽप्रसिद्धं तत्र तद्ग्र
विरोधत्वं नोपादेयम् । एवमन्यत्रापि । शेषं हेत्वाभासलक्षणोक्तावि
द्यावसेयम् । व्यर्थविशेषणत्वन्तु न व्याप्तिग्रहविरोधीति वक्ष्यते
साध्याव्यभिचरितसामानाधिकरण्यविरहस्य बहिर्भावनीयत्वे पु
रुत्वकल्पनात् व्यापकत्वस्याव्यभिचरितत्वं वा सामानाधिकरण

तकलितं युगपदुपादेयम् । तत्र साधारणत्वं वर्णितम् । असाधा- त्वन्तु सपक्षव्यावृत्तत्वं, सपक्षश्च साध्यवान्, तद्व्यावृत्तत्वन्तदु- त्वग्रहविरोधित्वम् । प्रकृतसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य ायतया तदुभयसामानाधिकरण्यग्रहविरोधितावच्छेदकमिति निष्कर्षः । संगृह्यते चेत्थं साध्यादेः साधनवद्वृत्तित्वादिकम् ।

( गा० ) व्यतिरेकव्याप्तिग्रहविरोधिनो हेत्वाभासान्तरताविरहा- य व्यभिचारमध्य एवान्तर्भावस्यौचित्यात्तस्यैवानुपसंहारित्व- तां स्वातंत्र्येण व्यवस्थापयितुं भूमिकामाह व्याप्तिग्रहेति । एक- ाभासत्वं-व्यभिचाररूपैकहेत्वाभासान्तर्गतत्वम् व्यापकताज्ञान- नुमितिहेतुताया निराकृतत्वादाहाव्यभिचारत्वस्य वेति । सा- ाधिकरण्यस्य-साध्यसामानाधिकरण्यस्य, साध्यासामानाधि- ण्यमेवासाधारण्यं न तु मणिकारसंमतं साध्यव्यापकीभूताभा- तियोगित्वं तस्यानुमितौ साक्षादेव विरोधित्वेन सत्प्रतिपक्षादि- भिचारान्यहेत्वाभासताया एव युक्तत्वादित्याशयः ।

असाधारण्यस्य साध्यासामानाधिकरण्यरूपत्वेऽनुमितिविरोधि- ि घटितमूलोक्तसामान्यलक्षणस्याव्याप्त्यातिव्याप्तिकरम्बितत्वात् ा सामान्यलक्षणमाह लक्षणं त्विति । ज्ञानस्य विषयतया-विष- ्य, विरोधितावच्छेदकं-प्रतिबन्धकतायामवच्छेदकं प्रतिबन्ध- ावच्छेदकीभूतज्ञानवृत्तिविषयताकत्वमिति तु पर्यवसितम् । ए- ोपि सर्वत्र बोध्यम् । अनुपसंहारित्वसंग्रहायाह व्याप्तीश्चेति । ापि रूपेण व्याप्तीनामनुगमे तज्ज्ञानसामान्यविरोधित्वं न सा- ण्यादेरित्यत आह प्रातिस्विकेति । असिद्धिभेदस्येत्थनेनालक्ष्य- ार्शितम् । असिद्धिभेदो व्याप्यत्वासिद्धिः । साध्यसाधनयोर्वृत्ति- ाध्यसाधनसामानाधिकरण्यग्रहविरोधितया असाधारण्यमेवे- व्यावृत्तेरनपेक्षिततया साध्यादिमत्त्वपर्यन्तानानुधावनम् । ननु ान् वह्निरित्यादिस्थलीयसाधारण्याद्यसंग्रहप्रसङ्गः तत्र विशिष्ट- ादिग्रहाविरोध्यप्रसिद्धेः । न च विशिष्टसाध्यादिग्रहविरोधिनी नीजिज्ञासैव प्रसिद्धेति तदन्यज्ञाननिष्ठव्याप्तिग्रहविरोधितावच्छे- पत्वमादाय लक्षणसमन्वयः संभवतीति वाच्यम् । एवमपि वन

कामिन्यादेरेव साध्यता हेतुता वा तत्र साध्यादिग्रहविरोध्यप्रसि
द्धेर्दुर्वारत्वादित्यत आह साध्यसाधनभेदेनेति । साध्यतावच्छेदक
दिभेदेनेत्यर्थः । नोपादेयमिति । तत्र साध्याप्रसिद्ध्यादिदोषाप्रसि
तदनुपादानेऽप्यतिप्रसङ्गानवकाशादिति भावः । तथाच दर्शितस्थ
विशिष्टसाध्यादिग्रहविरोध्यप्रसिद्ध्याऽव्याप्तेर्नावकाश इत्याशयः ।
दि स्वाप्रामाण्यविशिष्टसाध्यादिग्रहकत्वमाविरोध्यन्तार्थस्तदाऽवि
रोधिन इत्यन्तस्योपादानेऽपि नाव्याप्तिरित्यपि बोध्यम् । अन्यत्रापि
वक्ष्यमाणासाधारणादिलक्षणेऽपि, शेषमवच्छेदकत्वनिर्वचनं, विशि
ष्टान्तराघटितत्वनिवेशनादिकम् ।

ननु नीलधूमादित्यादौ हेतुतावच्छेदकस्य साध्यसामानाधि
रण्यानवच्छेदकत्वरूपव्यर्थविशेषणतायां व्याप्यत्वासिद्धिप्रभेदत्वे
व्याप्तिग्रहविरोधिन्यामतिव्याप्तिरित्यत आह व्यर्थविशेषणं त्विति
वक्ष्यत इति । असिद्धिग्रन्थ इति शेषः । व्याप्त्यभावेतिव्याप्तिमा
त्याह साध्याव्यभिचरितेति । स्वमते व्यापकताज्ञानस्यानुमित्यहे
त्वेन तद्विरोधिनोऽव्यापकतादेः साक्षाज्जनकज्ञानाविरोधित्वेन न है
त्वाभासत्वमिति स्वमताभिप्रायेणाहाव्यभिचरितत्वं वेति । साध्या
भाववदवृत्तित्वं वेत्यर्थः । युगपदिति । एकज्ञानविशेषणतयेत्यर्थः
हेतौ साध्याव्यभिचारावगाहित्वे सति तत्र सामानाधिकरण्यावगा
हि यज्ज्ञानं तद्विरोधित्वं निवेश्यम्, न तु अव्यभिचारविशिष्टसामा
नाधिकरण्यावगाहित्वमिति समुदायार्थः । तथाच विशिष्टाभावप्र
हस्य विशिष्टवत्ताज्ञानमात्रविरोधितया वह्निस्त्वेऽपि साध्याव्यभिचा
री साध्यसमानाधिकरणश्च हेतुरिति विशकलितदलद्वयावगाहिज्ञा
नोदयान्न विशिष्टाभावेऽतिव्याप्तिरिति भावः । साध्याप्रसिद्ध्यादिव्य
भिचारानात्मकस्यापि व्याप्यत्वासिद्धेः सत्त्वाद्दर्शितविशिष्टाभा
व्यासिद्धिव्यभिचारोभयरूपत्वेऽपि न क्षतिरित्यत्रानिर्भरसूचना
बहिर्भावनीयत्वे पुनरित्युक्तम् ।

अथानुमितौ सामानाधिकरण्यसम्बन्धेनाव्यभिचारविशिष्टं
सामानाधिकरण्यं तत्प्रकारकहेतुज्ञानत्वेन न हेतुता सामानाधि
रण्यविशिष्टाव्यभिचारज्ञानत्वेनापि विनिगमनाविरहेण हेतुताप्रस
त् हेतोर्व्यभिचारज्ञानकालेऽपि हेतुविशेषणतापन्नसामानाधिकरण्यां
विशेषणतयाऽव्यभिचारभावे बाधकाभावेनानुमित्यप्रसङ्गः । न

।विषविशिष्टज्ञानस्यानुमितिहेतुत्वोपगमाद्धेतौ व्यभिचारग्रहदशा- तत्र सामानाधिकरण्यविशिष्टाव्यभिचारग्रहाभावादनुमित्याप- रिति वाच्यम् । उभयविधव्याप्तिज्ञानसत्त्व एवानुमितिरित्युपग- यानुभवविरोधेनासंभवात्, तृणारणिमणिन्यायेनैवोपदर्शितोभय- अविशिष्टज्ञानहेतुतायाः स्वीकरणीयत्वाद्व्यभिचारग्रहकाले तद- वविशिष्टसामानाधिकरण्यग्रहाधीनानुमित्यापत्तेर्दुर्वारत्वात्, तथा व्यभिचारसामानाधिकरण्योभयावच्छिन्नहेतुविषयताशालिज्ञान- नैवानुमितिहेतुता वाच्या तादृशज्ञाने प्रत्येकाभावज्ञानमेव विरोधि येकविशिष्टापराभावज्ञानं प्रतियोगितावच्छेदकविशिष्टप्रतियोगि- ाबुद्धेरेकाभावधीप्रतिबध्यत्वादिति विशिष्टाभावस्य हेत्वाभास- मेव दुर्घटं क्वान्तर्भावबहिर्भावविचार इति चेन्न । सामानाधिकर- सम्बन्धेनैकविशिष्टापरस्याभावग्रहो यथा तादृशविशिष्टप्रकारक- ;विरोधी तथा युगपद्विशेषणविशेष्योभयधर्मावच्छिन्नतया एकध- ग्रहेऽप्युभयाभावग्रहवद्विरोध्युभयाभावसमशीलतादृशाभावग्रहद्व- यां सामानाधिकरण्येनैकविशिष्टापरग्रहसमशीलधर्मद्वयवत्ताग्रहा- पादस्यानुभवसिद्धतया प्रत्याख्यातुमशक्यत्वात् । अत एवासि- ग्रन्थे व्याप्तिविशिष्टपक्षधर्मताविरहस्य विशिष्टपरामर्शविरोधित- दोषत्वं स्वयं व्यवस्थापयिष्यते न हि विशिष्टपरामर्शस्य एकवि- ष्टापरावगाहित्वं कारणतावच्छेदकं लाघवेनानुभवबलेन च हे- व्याप्तिपक्षधर्मत्वोभयावगाहिज्ञानस्यैवानुमितिहेतुत्वोपगमात् । न ं विशकलितव्यभिचारसामानाधिकरण्योभयावगाहिधीविरोधि- ।पादानेनापि न विशिष्टाभाववारणसंभव इति वाच्यम् । विशक- तोभयावगाहित्वं हि न मिथो विशेष्यविशेषणभावानापन्नोभया- ाहित्वम्, अपि तु धर्मिनिष्ठविभिन्नविषयतानिरूपितोभयविषय- प्रतियोगित्वम् । तत्र साध्याव्यभिचारी हेतुः साध्यसमानाधिक- ो हेतुरिति समूहालंबनबुद्धौ, तस्याश्च न विशिष्टाभावधीप्रतिब- ता अपि तु उभयविषयतानिरूपितैकविषयताशालिबुद्धेरेवेति व- तं साधारणग्रन्थे ।

असाधारण्यस्य सत्प्रतिपक्षोत्थापकतया दूषकताया मणिका- ाम्मततया तदनुपाविना पूर्वं साध्यव्यापकीभूताभावप्रतियोगित्व- ाधारण्यमिति व्याख्यातम् तच्च स्वानुमतमित्यन्यथा तन्निर्वक्ति

असाधारणत्वं तिष्ठति । पक्षव्यावृत्तत्वमिति । यद्यप्येतदनुपसंहा-
रित्वमिति तदेवासाधारणत्वविवरणमिदन्तु किमन्तरा तद्विवरणे
तथापि सपक्षव्यावृत्तत्वमसाधारणत्वमिति प्राचीनप्रवादाविरुद्ध-
त्वमतस्य दर्शयितुमेतद्विवरणम् । निश्चितसाध्यवद्व्यावृत्तत्वस्य व्या-
प्तिग्रहं प्रति साक्षादविरोधितायाः प्रागव्यवस्थापितत्वात् निश्चयांश-
परित्यागेन सपक्षपदं व्याचष्टे सपक्षश्चेति । तद्व्यावृत्तत्वं यदि तदवृ-
त्तित्वं तदा साध्यादिनिष्ठहेतुत्वसामानाधिकरण्यसाध्यवदवृत्तित्ववि-
शिष्टसाधनादेरसङ्ग्रह इति तत्साधारण्याय व्याचष्टे तद्व्यावृत्तत्वमि-
ति । साध्याप्रसिद्ध्यादेरपि विशिष्टसाध्यादिसामानाधिकरण्यग्रह-
विरोधितयाऽतिप्रसङ्गवारणाय विशिष्टसाध्यादिग्रहाविरोधित्वमधि-
कं प्रवेशयन् विरोधिपदस्य प्रतिबन्धकपरताभ्रमनिराकरणाय तदं-
शं विवृणोति प्रकृतेत्यादिना । प्रकृतत्वं साध्यतावच्छेदकादिवैशिष्ट्य-
म् । तदुभयेति । विशिष्टसाध्यसाधनोभयेत्यर्थः । इत्थं-सामानाधि-
करण्यग्रहविरोधितात्मकानुगमकप्रकारेण ॥

(दी०) चाक्षुषस्पर्शवान् स्पार्शनशब्दवत्त्वादित्यादौ वि-
शेष्ययोरसामानाधिकरण्यञ्च । बाधासिद्धिभेदस्य च साध्यसाध-
नयोरवृत्तित्वस्यैतत्साङ्कर्येऽपि न क्षतिः । इदमेव च मणिकृतां
विरुद्धत्वम् । इत्थञ्च तदीयमसाधारणत्वमेव विरुद्धत्वमिति । यत्र
च धर्मिणि यो धर्मो यादृशो हेत्वाभासः तद्व्याप्यमपि तद्विशेषो-
ऽन्तरेण प्रकरणसमस्तद्व्याप्यञ्च, पृथगुपदेशादविरोधाच्च । अनुपसंहारि-
त्वञ्च विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्य-
तिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वम् । तादृशञ्च साध्यादेः
स्वन्ताभावाप्रतियोगित्वादिकम् । वह्न्यभावाभावत्वेन वह्नेर्धूमाभाव-
वदवृत्तित्वज्ञानं वह्न्यभावस्य धूमाभावव्यापकताज्ञानं कदाचिद्वि-
रुद्धादपि न तु वह्नित्वेनेति नातिप्रसङ्गः । केवलान्वयिनि तत्स-
म्भवेऽपि अन्वयव्याप्त्युपादानेनानुमितिप्रतिरोध इति दिक् ॥

इति अनुपसंहारिदीधितिः ॥

ननु विशिष्टसाध्यसाधनसामानाधिकरण्यग्रहत्वावच्छिन्नाविरो-
धिता विरोधिता समूहालम्बनविशेषविरोधिताव्यावर्तनायावश्यं प्रवे-
शे तत्र चावच्छिन्नत्वं स्वरूपसम्बन्धात्मकमेव निवेश्यते न स्व-
न्यूनवृत्तित्वं गौरवात्तथाच विशिष्टसाध्यसाधनग्रहाविरोधित्वनिवे-
शमनर्थकं साध्याप्रसिद्ध्यादिग्रहप्रतिबध्यताया विशिष्टसाध्यादिग्र-
हनिष्ठावच्छिन्नत्वादित्यत आह चाक्षुषस्पर्शेति । विशेष्ययोः-स्पर्श-
द्रव्ययोः, परस्परासामानाधिकरण्यं संगृह्यत इत्यनेनान्वयः । तथाच
स्वरूपसम्बन्धरूपावच्छिन्नत्वनिवेशे तत्राव्याप्तिः तादृशाविरोधिप्र-
तिबध्यतावच्छेदककोटौ साध्यताद्यवच्छेदकचाक्षुषत्वादिविषय-
प्रवेशेन विशिष्टसाध्यादिसामानाधिकरण्यग्रहत्वावच्छिन्नाविरोधि-
तायास्तत्रासत्त्वादित्यन्यूनवृत्तित्वरूपमेव तन्निवेश्यम्, तथाच तत्स्थ-
लीयसाध्याप्रसिद्ध्यादिग्रहप्रतिबध्यताया अपि विशिष्टसाध्यादिसामा-
नाधिकरण्यग्रहत्वान्यूनवृत्तित्वात् तत्रातिप्रसङ्गवारणाय विशिष्टसा-
ध्यादिग्रहाविरोधित्वनिवेशनमावश्यकमिति भावः ।

ननु साध्यस्यावृत्तित्वे बाधरूपे साधनस्य चाऽवृत्तित्वे स्वरूपा-
सिद्ध्यात्मकेऽतिव्याप्तिः तद्ग्रहस्यापि साध्यवत्तादिग्रहविरोधितया त-
दुभयसामानाधिकरण्यग्रहविरोधित्वादित्याशङ्क्य तयोर्लक्ष्यता-
ङ्गीकारेण निराकरोति बाधेति । एतत्सांकर्य्येऽपि-असाधारण्यक-
क्षायामपि । न क्षतिरिति । अन्यादृशस्यापि बाधादेः प्रसिद्ध्या स्वातन्त्र्ये-
ण तत्परिगणनोपपत्तेरिति भावः ।

ननु साधनादेः साध्यासामानाधिकरण्यादिकं विरोध एव तस्य
कथमसाधारण्यतोपगम इत्यत आह इदमिति । मणिकृत एव इदं
लक्षणत्वमनुमतं न तु ममेत्यर्थः । नन्वेवं भवतां को विरोध इत्या-
काङ्क्षायामाह इत्थं चेति । तदीयं-मणिकारीयं, साध्यव्यापकाभावप्र-
तियोगित्वरूपमसाधारणत्वम् ।

ननु साधनादेः साध्यासामानाधिकरण्यवत्त्वस्य तद्व्याप्यवत्त्वाभा-
वेऽपि उभयसामानाधिकरण्यग्रहविरोधीति तत्रोक्तलक्षणातिव्याप्तिरित्या-
शङ्क्य तां लक्ष्यताप्रदर्शनेन निराकरोति यत्र चेति । प्रकरणसमं-पक्षनि-
ष्ठसाध्याभावादिव्याप्यम् । तद्व्याप्यं-पक्षनिष्ठसाध्याभावादिव्या-
प्यम् । तस्य बाधसत्प्रतिपक्षाविरोधकत्वाभावादिति शेषः ।
हेतुमाह पृथगिति । पक्षनिष्ठसाध्याभावादिव्याप्यस्य सत्प्र-

तिपक्षतया स्वतन्त्रपरिगणनात्तादृशस्य साध्यवत्ताज्ञानविरो
धीविषयत्वेन हेत्वाभासताविरहादित्यर्थः । व्यतिरेकव्याप्तिग्रहे
हेत्वभावत्वावच्छिन्नधर्मिकसाध्याभावव्यापकताग्रहेत्यर्थः । साध्य
रित्यादिना साधनस्य साधनाभावस्य च परिग्रहः । अत्यन्ता
वाप्रतियोगित्वेनादिपदग्राह्यसाधनस्याप्यन्वयः । अप्रतियोगित्वा
ना साध्याभावाव्यापकत्वपरिग्रहः । तस्य च साधनाभावेन सम्बन्ध

अथाभावाप्रतियोगित्वधीरभावप्रतियोगित्वप्रकारकं ज्ञानं प्रत
विरोधिनी न तु तदप्रकारकं साध्याभावव्यापको हेत्वभाव इत्या
ज्ञानं प्रति ग्राह्याभावानवगाहित्वात् । न चैतादृशज्ञानेपि संस
याऽभावप्रतियोगित्वभानादभावाप्रतियोगित्वं ग्राह्याभाव एवेति
थ्यम् । अभावांशे विशेषणीभवतः साध्यादेरनुयोगितायाः एव सं
गितया प्रतियोगितायास्तत्राभानात् । प्रतियोगितानिरूपकत्वा
च्छिन्नैवानुयोगिता सम्बन्धो न तु केवला प्रतियोगित्वानुयोगित्व
समानवित्तिवेद्यतायाः सिद्धान्तसिद्धत्वादिति चेत् । एवमप्यभा
प्रतियोगितात्वेन प्रतियोगिताया ग्राह्यताविरहात्तत्रूपावच्छिन्ना
वस्य विरोधितानुपपत्तिः ।

यत्तु—अभावे अनुयोगितासम्बन्धावच्छिन्नसाध्याद्यभावस्यैव
वतया विवक्षणम्—तदपि न, वाच्यत्वादिसाध्यहेतुकेपि संयोगा
सम्बन्धावच्छिन्नप्रतियोगिताकस्य द्वित्वाद्यवच्छिन्नप्रतियोगिता
स्य चाभावस्यानुयोगितासम्बन्धेन साध्यादिसम्बन्धित्वादभा
त्वावच्छेदेन तत्सम्बन्धावच्छिन्नसाध्याद्यभाववत्त्वाप्रसिद्धेः
अभावत्वसामानाधिकरण्यमात्रेण तद्बुद्धाधियश्च अभावत्व
मानाधिकरण्यमात्रेण साध्यादिप्रकारकव्यतिरेकव्याप्तिग्रहा
रोधितया तस्य दोषत्वायोगात् । स्वरूपादिसम्बन्धावच्छि
वाच्यत्वत्वाद्यवच्छिन्नप्रतियोगितानिरूपितानुयोगितासम्बन्धस्य
प्रसिद्ध्या तादृशसम्बन्धावच्छिन्नाभावोप्यप्रसिद्ध इति
तादृशस्य दोषतोपगमसम्भवः । साध्यताद्यवच्छेदकस्य स्वावच्छि
न्नसम्बन्धविशेषावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नप्रतियो
ताकाभावोऽभावांशे तादृशसम्बन्धेन प्रतियोगिविशेषणतापन्नसा
तावच्छेदकादिप्रकारकव्यतिरेकव्याप्तिग्रहविरोधितयाऽनुपसंहारि
त्वस्यापि न सार्वत्रिकं विशेषणान्तरानवच्छिन्नाभावत्वादेर्यत्र साध्य

च्छेदकता तत्र स्वरूपतस्तत्प्रकारकव्यतिरेकव्याप्तिबुद्धेरेव हेतु·
ा तत्र तदभावप्रकारकज्ञानस्य नियमेन तदंशे प्रतियोगितावच्छे·
ज्ञानत्वत्वादिप्रकारतया अविरोधित्वात् प्रतियोगितावच्छेदक·
ारकप्रतियोगिमत्ताबुद्धेरेव समानप्रकारकतया अभावग्रह·
तिबन्ध्यत्वात् वृत्त्यनियामकसम्बन्धस्य संसर्गाभावप्रतियोगितानव·
ेदकतया तादृशसम्बन्धावच्छिन्नाभावाप्रसिद्धेश्च । एतेन तत्स·
न्धेन तत्प्रकारकबुद्धौ समानधर्मिकतत्सम्बन्धावच्छिन्नतदभा·
त्ताबुद्धिवत् तद्धर्मस्य तेन सम्बन्धेन असम्बद्धत्वग्रहस्यापि प्र·
न्धकत्वमानुभविकम् । अत एव साध्यादेरवृत्तित्वस्य बाधादिप्र·
तोक्तिरपि सङ्गच्छते । एवं च साध्यादेरत्यन्ताभावाप्रतियोगित्वादि·
मिति यथाश्रुतस्यैव सङ्गतिरित्यप्ययुक्तम्—केवलान्वयिन्यपि वृत्त्या·
ाच्छिन्नाभावप्रतियोगित्वेसत्त्वेन तन्निष्ठतदप्रतियोगित्वासिद्धेः ।
रूपादिसम्बन्धावच्छिन्नवाच्यत्वत्वाद्यवच्छिन्नप्रतियोगिताया अप्र·
द्धा तदभावस्याप्रसिद्धेः । साध्यताद्यवच्छेदकसम्बन्धविशेषाव·
छन्नप्रतियोगितानवच्छेदकत्वमनुपसंहारित्वमित्यपि स्वरूपतो ज्ञा·
शादिसाध्यतावच्छेदकस्थले न सम्भवति निर्विशेषणकज्ञानत्वादि·
ायकव्याप्तिग्रहे ज्ञानत्वत्वादिप्रकारेणासम्बद्धत्वग्रहस्यासमानप्र·
रकतयाऽविरोधित्वात् । साध्यतावच्छेदकावच्छेदेन वर्तमानः सा·
तावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाभावोऽनुपसंहारित्वमि·
प्रगल्भानुमतमननुमतमेव दीधितिकृता व्याप्तिवादे निराकृतत्वात्।
अत्राहुः विशिष्टबुद्धौ विशेष्ये प्रकाराभावग्रहवद्विशिष्टसंसर्गक·
ौ संसर्गे संसर्गतावच्छेदकाभावग्रहोऽपि विरोधी संसर्गविशेषा·
च्छिन्नविषयताया एव ग्राह्याभावधीप्रतिबध्यतावच्छेदकत्वात् वि·
ष्टसंसर्गकबोधस्थले संसर्गतावच्छेदकीयवैशिष्ट्यस्यापि संसर्ग·
न्तःपातिसंसर्गतया संसर्गतावच्छेदकविषयताया अपि संसर्गा·
च्छिन्नत्वात् । एवं च वाच्यत्वत्वाद्यवच्छिन्नत्वस्वरूपसम्बन्धाव·
च्छिन्नत्वोभयविशेषितप्रतियोगितासंसर्गके वाच्यत्वाभावव्यापको
भाव इति ज्ञाने प्रतियोगितात्वावच्छेदेन तदुभयाभावग्रहस्य
रोधितया तद्विषयतादृशाभावोऽनुपसंहारित्वमिति विवक्षितम् ।
धिकमन्यत्रानुसन्धेयम् ।
ननूक्तलक्षणस्य हेतुनिष्ठसाध्याभाववद्वृत्तित्वरूपसाधारण्येऽति·

व्याप्तिः तज्ज्ञानस्यापि हेत्वभावप्रतियोगिकाभावे हेतौ साध्याभावसामानाधिकरण्यावगाहितया हेत्वभावे साध्याभावसमानाधिकरणाभावाप्रतियोगित्वज्ञानाविरोधित्वात् साध्याभावसमानाधिकरणत्वेन भासमानेऽभावे हेत्वभावप्रतियोगिकत्वग्रहस्य तुल्यवित्तिवेद्यतया हेत्वभावे तादृशाभावप्रतियोगित्वावगाहनादित्यभिमानं निराकरोति वह्न्यभावभावात्वेनेति । कदाचिद्विरुध्यादिति । सम्भावनायां लिङ् । तुल्यवित्तिवेद्यतायां मानाभावात् भावे वा । इहापि असमानप्रकारकतया उक्तज्ञानस्य व्यापकताज्ञानाविरोधिताया विचारासहत्वादाभिमरः । न तु वह्नित्वेनेति । तेन रूपेण भाने हेत्वभावांशे प्रतियोगिताया असंस्पर्शादिति भावः । नातिप्रसङ्ग इति । हेतुतावच्छेदकावच्छिन्नस्य साध्याभाववद्वृत्तिताया एव साधारणत्वात् उक्तबुद्धेर्विरोधितायाः प्रामाणिकत्वे हेत्वभावाभावत्वावच्छिन्नस्य साध्याभाववद्वृत्तिताया लक्ष्यत्वादेवेति भावः । तत्सम्भवेऽपि—अभावप्रतियोगित्वरूपानुपसंहारित्वसम्भवेऽपि, अन्वयव्याप्त्युपादानेन-अन्वयव्याप्तिधीसम्भवेन, नानुमितिप्रतिरोधः—विशेषदर्शिनोऽपि नानुमित्यनुत्पादः । न चैवमपि केवलान्वयिसाध्यकहेतोराभासतया तत्प्रयोक्तुर्निग्रहप्रसङ्ग इति वाच्यम् । अभिमतसाधकताविघटकाभासस्यैव निग्रहप्रयोजकतया अन्वयिमुद्रया गमकता यत्राभिमता तत्र निग्रहायोगात् व्यतिरेकिप्रयोगे निग्रहस्येष्टत्वात् इति ॥

इति श्रीगदाधरभट्टाचार्यचक्रवर्तिविरचितायां अनुमानगादाधर्यामनुपसंहारिप्रकरणम् ।



अथानुमानगादाधर्यां

# विरुद्धप्रकरणम् ।

(वि०) विरुद्धो न साध्याभावव्याप्यः, संयोग-
ध्यंके सद्धेतावतिव्याप्तेः। नापि साध्यवन्निष्ठात्य-
ाभावप्रतियोगिव्याप्यत्वं तत्त्वम्, इदं द्रव्यं गुणव-
ादित्यादौ संयोगादिव्याप्येऽतिव्याप्तेः। किन्तु सा-
ासमानाधिकरणसाध्याभावव्याप्यः साध्यवदन्यो-
ाभावव्याप्यो वा। साध्याभावत्वं साध्यविरोधित्व-
त्रं भावाभावसाधारणम्, तेनाभावे साध्येऽभावा-
वस्य भावत्वेऽपि नाव्याप्तिः। अभावाभावोऽभाव-
तियोगिनिरूप्यत्वेन भावाद्भिन्न एव वा। न च भावत्वे-
ोपपत्तौ किमधिकेनेति वाच्यम्। बाधकं विनाऽभाव-
ीतेः प्रमात्वात्, अन्यथा अत्यन्ताभावाऽन्योन्याभा-
योरप्रसिद्धिः।

(दी०) साध्यविरोधित्वं साध्यप्रतियोगिकत्वम्। एकदे-
मतेनाह अभावेत्यादि। न च भावस्य स्वाभावविरहात्मक-
रूपप्रतियोगित्वग्राहिधर्मिग्राहकमानबाधः, प्रतियोगित्वस्य स-
न्धान्तरत्वात्। स्वस्याभावस्येत्यत्र षष्ठ्यर्थस्य तस्याबह्याभ्यु-
त्वात्। विरहत्वञ्च नाभावत्वं, बाधात्। नापि तद्ग्रहप्रतिबन्ध-
ग्रहाविषयत्वम्, अविरोधात् प्रत्यक्षेण दुर्ग्रहत्वाच्च। न चानवस्था,
भावस्य स्वाभावाभावत्वे बाधकाभावात्। भावस्य तथात्वे
बकमाह बाधकं विनेत्यादि। अभावप्रतीतेः अभावत्वप्रकारि-

ष्टप्रतीतेः। अभावत्वञ्च न भावभिन्नत्वं प्रथमं दुर्ग्रहत्वात्, किन्त्वयमभावो न भाव इति प्रतीतिसाक्षिकं पदार्थान्तरम्, तच्चानुपस्थितं निर्विकल्पकोपस्थितं वा प्रकारः, अभावत्वञ्चासमवेतत्वान्न जातिः। अन्यथेति। अनतिप्रसक्तैराधिकरणैस्तद्धर्मैर्वा अभावव्यवहारोपपत्तेरिति भावः। लाघवादबाधिताभावत्वविशिष्टप्रत्ययबलाच्चातिरिक्तैकाभावसिद्धिस्तुल्यैव। एतेनाभावत्वं सप्रतियोगिकत्वं तच्चाननुगतानामप्यावश्यकानां प्रतियोगिनां कल्प्यते इत्यपास्तम्। संयोगादिसाधारण्याच्च॥

(गा०)साध्याभावत्वं साध्यविरोधित्वमात्रमस्यत्र मूले साध्यविरोधित्वं यदि साध्यासामानाधिकरण्यं तदा साध्यसमानाधिकरणपदोपादानवैयर्थ्यमिति तद्व्याचष्टे साध्येति। साध्यासमानाधिकरणत्वं साध्यानधिकरणवृत्तित्वं न तु साध्याधिकरणावृत्तित्वमतो न साध्याभावपदोपादानवैयर्थ्यम्। अधिकरणभेदेन संयोगाद्यभावभेदमते इदं लक्षणम्, अतो न संयोगी द्रव्यत्वादित्यादावतिव्याप्तिः। साध्यासमानाधिकरणपदं प्रतियोगिवैयधिकरण्यविशिष्टार्थकमित्यपि केचित्। तन्न, साध्याभावप्रतियोगित्वेन साध्योपादानस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात्। मूलस्थमात्रपदेन भावव्यावर्तकाभावत्वनिवेशव्यवच्छेदः।

अभावाभावस्य अभावप्रतियोगिकस्य भावत्वेपि भावतयाऽभावत्वाविरहेपि अभावत्वानिवेशाभ्युपगमेनाभावाभाव इत्यादिकल्पान्तराभिधानस्य सिद्धान्तत्वभ्रमनिरासायाह दीधितौ एकदेशीति। ननु घटाभावो नास्तीत्यादिप्रतीत्या घटाभावाभावत्वविशिष्टधर्मो सिध्यति तस्यातिरिक्तत्वं च सैव विरुणद्धि तस्या एव घटादिरूपभावे स्वाभावाभावत्वरूपस्वाभावप्रतियोगित्वावगाहित्वादित्याशंकते न चेति। संबन्धान्तरत्वात्-अभावत्वान्यसम्बन्धत्वात। स च सम्बन्धः स्वरूपादतिरिक्तोऽनतिरिक्तो वत्युभयथैव न क्षतिरिति भावः। बाधादित्यस्य भाव इत्यादि। अविरोधादिति। अभावाभावस्यातिरिक्तत्ववादिनापि प्रतियोगिमत्ताज्ञानस्याभावप्रत्यक्षप्रतिबन्धकत्वापगमादिति भावः। प्रत्यक्षेणेति। वंद्रष्टप्रतिबन्धकप्रत्यक्षविषयत्वस्य ज्ञानघटितत्वेन. चक्षुरयोग्यत्वादित्य

भावः । अनवस्था—अतिरिक्तानामभावानामप्यतिरिक्ताभावकल्पना-यामनन्ताभावकल्पनागौरवम् । बाधकाभावादिति । भावस्यैवाभाव-त्वकल्पनयोगादिति भावः ।

मूले भावत्वेनैवेति । घटाभावो नास्तीति प्रतीतेर्घटादिरूपभाव-विषयकत्वेनैवेत्यर्थः । किमधिकेन—घटाद्यतिरिक्तविषयकत्वेन, यथा-तिरिक्तस्यापि तेजोऽभावाद्यैरदन्त्वादिविशिष्टस्य न प्रतियोगिग्रहसा-पेक्षग्रहत्वं किन्त्वभावत्वावच्छिन्नस्यैव तथा घटत्वादिविशिष्टस्य प्रतियोग्यनिरूप्यत्वेपि घटादेरभावत्वेन प्रतियोगिनिरूप्यत्वे बाधक-विरहादिति भावः । अभावाभावप्रतीतेः प्रमात्वाभिधानस्य भावेऽभा-वप्रतियोगिकत्वबोधकतादृशप्रतीत्यप्रमात्वप्रसंजनसूत्रकतां स्फुटी-करोति दीधितौ भावस्येति । भावस्याभावप्रतियोगिकत्वेपि घटाभा-वो नास्तीत्यादिप्रतीतेरभावादिवैशिष्ट्यांशे प्रमात्वसंभवादभावरूप-प्रतियोगिधर्मितावच्छेदकतापन्नाभावत्वांशे तत्र प्रमात्वानुपपत्तिला-भाय व्याचष्टेऽभावेति । अभावत्वं भाववैधर्म्यं तच्च भावे न संभवती-ति तद्विशिष्टवाचकनञुल्लेखिन्या घटाभावो नास्तीत्यादिप्रतीतेस्तेन रूपेण घटाद्यवगाहित्वे तदंशे प्रमात्वं व्याहन्येतेति मूलाभिप्रायः । अभा-वत्वं यदि भावभिन्नत्वं तदा भावे तदप्रसक्त्या भावेप्यभावत्वस्वीकार इत्यर्थकान्यथेतिमूलानुपपत्तिरतोऽभावत्वस्य तदन्यत्वं व्यवस्था-पयति अभावत्वं चेति । प्रथमं—भावत्वादिप्रकारकज्ञानानुत्पत्ति-दशायाम् । अभावो न भाव इति । एतावता तस्य भावभिन्नत्वरूपता निरस्ता तथासत्यभावो न भाव इत्यनयोः समानार्थकतया विषय-भेदाधीनद्विधाभिलापानुपपत्तेः ।

ननु तथाप्यभावत्वस्य निर्विकल्पकाऽवेद्यतायाः सिद्धान्तसिद्ध-त्वाद्विशेषणज्ञानविरहेण प्रथमं तत्प्रकारकप्रत्यक्षानुपपत्तिरित्यत आह तच्चेति । अनुपस्थितमिति । विशिष्टबुद्धौ विशेषणज्ञानहेतुता-या विशेषणभेदेन भिन्नतया अभावत्वविशिष्टबुद्धौ उक्तज्ञानहेतुताया-कल्पनादित्यभिप्रायः । ननु केवलप्रमेयत्वादिना अभावत्वादिप्रकार-कोपनीतभानदशायां स्वरूपतोऽभावत्वप्रकारतानैयत्यवारणाय स्व-रूपतस्तत्प्रकारकबुद्धौ लौकिकान्यत्वं कार्यतावच्छेदककोटावनि-वेश्यैव स्वरूपतस्तद्विषयकज्ञानत्वेन हेतुता कल्प्यते लाघवात्, तथाच भावो नास्तीत्यादिलौकिकप्रत्ययपूर्वकालेपि स्वरूपतस्तद्विषयकज्ञान-

